युक्तिप्रसिद्धतायां च स्वतन्त्रं साधनं भवेत् ।
ईदृशश्च परेणेष्टस्तत्प्रणीतः स आगमः ॥ ३६०६ ॥
सम्भारावेधतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ ३६०७ ॥
आधिपत्यप्रपत्त्याऽतः प्रणेता सोऽभिधीयते ।
विकल्पानुगतं तस्य न वक्तृत्वं प्रसज्यते ॥ ३६०८ ॥
वयमश्रद्दधानास्तु ये युक्तीः प्रार्थयामहे ।
इतीदं गदितं तस्मात् प्रसङ्गार्थमजानता ॥ ३६०९ ॥
कुड्यादिनिःसृतानां च कस्मान्नाप्तोपदिष्टता ।
तदाधिपत्यभावेन यदा तासां प्रवर्त्तनम् ॥ ३६१० ॥
सम्भिन्नालापहिंसादिकुत्सितार्थविवर्जिताः ।
क्रीडाशीलपिशाचादिप्रणीताः स्युः कथं च ताः ॥ ३६११ ॥

---

ऽभिधीयत इति न्यायः । तत्र यदि परेण वक्तृत्वानुगमेन तत्प्रणीतत्वमागमस्येष्टं स्यात्, तदा भवेद् वक्तृत्वाभावादागमस्यातत्प्रणीतत्वप्रसङ्गः; यावताऽऽधिपत्यमात्रेणासौ तस्यागमस्य प्रणेताऽभ्युपगतः, न वक्तृत्वोपगमात् । अतो यत्तत्प्रणीतागमोपगमेव वक्तृत्वापादनम्, तत्प्रसङ्गार्थानभिज्ञेन भवताभ्यधायि ॥ ३६०५–९ ॥

यच्चेदमुक्तम्—"कुड्यादिनिःसृतानाम्" ( तत्त्व० ३२४३ ) इत्यादि, तत्राह—कुड्यादीत्यादि । यदि हि तदाधिपत्येन तासां देशनानां न स्यात् प्रवृत्तिः, तदाऽऽप्तोपदिष्टता न भवेत् । [ G. 827 ] यदा तु तदाधिपत्येन ताः प्रवर्त्तन्त इत्युपगतम्, तदा किमिति तदुपदिष्टत्वमासां न भवेत् ॥ ३६१० ॥

यच्चोक्तम्—"विश्वासश्च न तासु स्यात्" ( तत्त्व० ३२४३ ) इति, तत्राह—सम्भिन्नेत्यादि । यदि हि नृत्यगीतहिंसागम्यगमनादेः तत्कर्तव्यतया तत्रोपदेशः स्यात्, तदा क्रीडाद्यभिरतपिशाचादिकार्योपलम्भात् तासां तत्प्रणीतत्वं सम्भावनापथमवतरेत्; यावता प्रमाणाविरुद्धमपरस्परपराहतमार्यजनोचितम्—करुणादिगुणेषु नियोजयितृ स्वर्गापवर्गफलवाहकमेतद् भगवतो वचनमित्युपपादितमेतत् । तदीदृशं कथं क्रीडनशीलस्य पिशाचादेः सम्भाव्यते । यदि तथा-

सम्भिन्नालापहिंसादिकुत्सितार्थोपदेशनम् ।
क्रीडाशीलपिशाचादिकार्यं तासु न विद्यते ॥ ३६१२ ॥
प्रमाणद्वयसंवादि मतं तद्विषयेऽखिले ।
यस्य बाधा प्रमाणाभ्यामणीयस्यपि नेक्ष्यते ॥ ३६१३ ॥
यच्चात्यन्तपरोक्षेऽपि पूर्वापरविबाधितम् ।
करुणादिगुणोत्पत्तौ सर्वपुंसां प्रयोजकम् ॥ ३६१४ ॥
सर्वाकारधरोपेतं सद्वृत्तप्रतिपादकम् ।
इहामुत्र च भव्यानां विविधाभ्युदयावहम् ॥ ३६१५ ॥
सर्वानुशयसन्दोहप्रतिपक्षाभिधायकम् ।
निर्वाणनगरद्वारकपाटपुरभेदि च ॥ ३६१६ ॥
तच्चेत् क्रीडनशीलानां रक्षसां वा वचो भवेत् ।
त एव सन्तु सम्बुद्धाः सर्वतल्लक्षणस्थितेः ॥ ३६१७ ॥
न हि नामान्तरक्लृप्तौ वस्तुरूपं निवर्त्तते ।
विशिष्टेऽशिष्टसंज्ञां तु कुर्वन् निन्द्यः सतां भवेत् ॥ ३६१८ ॥

---

भूतवचनप्रणेतृणामपि[1] भवता पिशाच इति नाम क्रियते, कामं क्रियताम्, न हि नामकरणे वस्तुस्वभावहानिः। किन्तु भवानेव विशिष्टे भगवत्यशिष्टव्यवहारं कुर्वन् सतां निन्द्यतामापद्येतेति समासार्थः।

अवयवार्थस्तूच्यते[2]— सम्भिन्नालापः = गीताद्युपदेशः। हिंसा = प्राणिवधः। कुत्सितार्थः = काममिथ्याचारादिः। [G. 928] प्रमाणद्वयसंवादीति। प्रमाणद्वयम् = प्रत्यक्षानुमाने, ताभ्यां संवादः = तदविरुद्धार्थता, सोऽस्यास्तीति तत्तथोक्तम्। मतमिति निश्चितम्। तद्विषयेऽखिल इति प्रमाणद्वयविषये। प्रमाणद्वयसंवादीति सम्बन्धः। सद्वृत्तम् = आदिमध्यान्तेकल्याणं ब्रह्मचर्यम्। सर्वानुशयसन्दोहः = दृग्भावनाहेयक्लेशौघः[3]। तल्लक्षणस्थितेरिति सम्बुद्धलक्षणस्थितेः ॥ ३६११–३६१८ ॥

---

1. ०तृणामपि—पा०, गा०।
2. ०तूच्येते—गा०।
3. ०क्लेशौघात्—जै०।

कामिथ्यासमाचारप्राणिहिंसादिलक्षणाः ।
असभ्यास्तु क्रिया येन वचसा सम्प्रकाशिताः ॥ ३६१९ ॥
तद्ध भुजङ्गपिशाचादिप्रणीतमिति शङ्क्यते ।
तच्चेष्टाभिरतानां हि तादृक् सम्भाव्यते वचः ॥ ३६२० ॥

सामट-यज्ञटमतखण्डनम्

युगपच्छुच्यशुच्यादिस्वभावानां विरोधिनाम् ।
ज्ञानमेकधिया दृष्टं न विरुद्धा विदा हि ते ॥ ३६२१ ॥
अन्योऽन्यपरिहारेण स्थितलक्षणतोऽथ वा ।
एकस्मिन्न सहस्थानं विरोधस्तेषु सम्भवेत् ॥ ३६२२ ॥
एकज्ञानावभासित्वं न तु तेषां विरोधिता ।

---

यथोक्तम्—

"अभिज्ञातमभिज्ञेयं भावनीयं च भावितम् ।
प्रहातव्यं च प्रहीणं च तेन बुद्धो निरुच्यते[1] ॥" ( ) इति ॥

वेदस्यैव क्रीडाशीलपिशाचादिप्रणीतत्वं युक्तं सम्भावयितुम्, येन गोसवादिष्वगम्यगमनादयोऽसमाचाराः सम्प्रकाशिता इत्येतदर्शयन्नाह—**कामेत्यादि** । **भुजङ्गः** = धूर्तः ॥ ३६१९–३६२० ॥

यच्चोक्तम्—"युगपच्छुच्यशुच्यादि" (तत्त्व० ३२४८) इत्यादि, तत्राह—**युगपदित्यादि** । यद्यपि भावाः केचित् परस्परं विरोधिनः, तथापि ते **विदा** = ज्ञानेन सहाविरुद्धा एव; युगपदेकेनापि ज्ञानेन विरुद्धानेकार्थग्रहणोपलम्भात् ॥ ३६२१ ॥

एतदेव स्पष्टयन्नाह—**अन्योऽन्यपरिहारेणेत्यादि** । द्विविध एव हि भावानां विरोधः—परस्परपरिहारस्थितलक्षणता, सहानवस्थानता च । तत्र ये परस्परपरिहारेण स्थितलक्षणाः, तेषामैक्यं विरुद्धम् । ये तु [G. 929] सहानवस्थायिनः, तेषामेकदेशावस्थानं विरुद्धम् । न चैकविज्ञानभासनादेषामैक्यम्, एकदेशत्वं वा प्रसज्येत । तेन नैकविज्ञानभासित्वेनैषां विरोधः । दृष्टं च

---

१. निरुच्यते—पा० ।

शुच्यशुच्यहिशिख्यादेश्चक्षुषा सकृदीक्षणात् ॥ ३६२३ ॥
सुखदुःखादिभेदे तु यत् सकृन्नास्ति वेदनम् ।
हेत्वभावादसान्निध्यात् तज्ज्ञेयं न विरुध्यते ॥ ३६२४ ॥
नीलपीतावदातादिरूपभेदाविरोधिनः ।
देशप्रकृतिभेदेन[1] वीक्ष्यन्ते युगपद् यतः ॥ ३६२५ ॥
एकज्ञानक्षणव्याप्तनिःशेषज्ञेयमण्डलः ।
प्रसाधितो हि सर्वज्ञः क्रमो नाश्रीयते ततः ॥ ३६२६ ॥

---

विरुद्धानामपि सतामेकज्ञानभासनम्, यथा शुच्यशुचिनोश्चक्षुर्ज्ञानेन परस्परपरिहारस्थितलक्षणयोरहेर्मयूरस्य च सहानवस्थायिनोर्युगपद् ग्रहणम्। आदिशब्देन छायातपादीनां ग्रहणम्। यदि तर्हि विरुद्धानामप्येकज्ञानावभासनमविरुद्धम्॥ ३६२२-३६२३ ॥

एवं सति सुखदुःखयो रागद्वेषयोरेकज्ञानभासनं प्राप्नोति? इत्याशङ्क्याह— सुखेत्यादि। तज्ज्ञेयमिति। यत्सुखादीनां सकृद्वेदनम्, तत् कारणाभावेनानुत्पत्तेरसन्निहितत्वात् सुखादीनां[2] विरुद्धत्वादित्येवं ज्ञेयम्, बोद्धव्यमित्यर्थः। एतदुक्तं भवति—कारणवैकल्यादसान्निध्यं तत्र कारणम्, न परस्परविरोध इति ॥३६२४॥

येषां च वास्तवो विरोधः, न तु शुच्यशुच्यादिवत् कल्पनाकृतः, तेषामप्येकज्ञाने भासनमस्तीति दर्शयति—नीलपीतेत्यादि[3]। देशप्रकृतिभेदेन विरोधिन इति सम्बन्धः। तत्र देशभेदः—तदतद्देशत्वम्। प्रकृतिभेदः—नीलपीतादिस्वभावत्वम्, यद्वा नीलाद्युपादानकारणत्वम् ॥ ३६२५ ॥

यच्चोक्तम्—"भूतं भवद्भविष्यच्च" (तत्त्व० ३२४९) इत्यादि, तत्राह— एकज्ञानेत्यादि।

अत्र केचित् स्वयूथ्या एव विज्ञानवादिमतमुपोद्बलयन्तश्चोदयन्ति— "यदि युगपदेकज्ञानक्षणेन अविशेषं[4] ज्ञेयमण्डलं व्याप्यते[5], तदा भावानामि-

---

१. ०भेदेऽपि—जै०, पा०।
२. तत्—पा०; न तु—गा०।
३. नीलपीतादि—जै०।
४. विशेषं—जै०, पा०।
५. व्याघाते—पा०।

यत्ताऽपरिच्छेदादानन्त्यमभ्युपेतं[1] बाध्येत । तथा हि—एकज्ञानारूढाद् भावादन्यो भावो नास्तीत्येवं परिच्छिद्यमानाः कथमन्तवन्तो न भवेयुः । आह च—

'एकज्ञानसमारूढान्नान्यो भावोऽस्ति कश्चन ।
इयन्त इति विज्ञानादन्तवन्तः.........॥' ( ) इति,

ततश्च क्रमपक्षे यो दोषः स युगपज्ज्ञानपक्षेऽपि" इति; तदेतदसारम्; यदि तावन्निराकारविज्ञानवादिमतमाश्रित्य चोद्यते, तदा सर्वमसङ्गतम् । तथा हि—यावत् किञ्चिद्वस्तुजातं[2] [ G. 930 ] सत्तामनुभवति, तस्य सर्वस्य सत्तामात्रेण सर्वज्ञचेतसा परिच्छेदात् तेन तद्व्याप्तमिति व्यपदिश्यते, न तु पटेनेव घटानां देशपर्यन्ततया व्याप्तेः । न चैकेन ज्ञानेन परिच्छिन्नानीत्येतावता वस्तूनामात्मस्वभावहानिः, येन तान्येकज्ञानपरिच्छेदवशादनन्तत्वमात्मस्वभावं जह्युः । न हि नीलपीतादयो भावा बहवो युगपच्चित्रास्तरणादिष्वेकज्ञानक्षणावसीयमानतनवोऽनेकत्वं जहति, नापि परस्परमन्वाविशन्ति; अपि तु यथैव सन्ति तथैव ज्ञानेन परिच्छिद्यन्ते, नान्येन रूपेण । तद्वत् सत्त्वभाजनलोकोऽपि यथैव सत्तामनुभवति तथैव सर्वज्ञचेतसा गृह्यते । अपर्यन्तश्च दिक्षु विदिक्षु सत्त्वादिलोकोऽवस्थित इत्यपर्यन्ततया[3] तस्य ग्रहणम्, न तु पर्यन्तवर्त्तितयेति कुतोऽन्तवत्त्वप्रसङ्गः !

स्यादेतत्, सकलग्रहणाभ्युपगमे कथं पर्यन्तग्रहणं न स्यादिति ? नैतदस्ति; को ह्यत्र प्रतिबन्धः—यत्र साकल्यग्रहणं तत्रावश्यं पर्यन्तग्रहणमिति । तथा हि—यावन्तस्ते सन्ति भावाः, तेषां मध्ये नैकोऽपि सर्वज्ञज्ञानाविदितस्वरूपः सत्तामनुभवति; अपि तु सर्व एव सर्वज्ञचेतसा विदितस्वरूपा एवोदयन्ते व्ययन्ते च, नैकोऽपि परित्यक्त इत्ययं सकलग्रहणस्यार्थः । इयमेव च तेषामेकज्ञानेन व्याप्तिः; अन्यथा सकलशब्दवाच्यत्वमपि तेषां नाङ्गीकर्त्तव्यं मा भूदन्तवत्त्वप्रसङ्ग इति यत्किञ्चिदेतत् ।

यच्चोक्तम्—एकज्ञानारूढाद् भावादन्यो नास्तीत्येवं परिच्छेदात् कथमन्तवन्तो न भवेयुरिति ? तदप्यसम्यक्; न हि निराकारज्ञानवादिपक्षे ज्ञानात्मनि भावानामारोहणमस्ति, अपि तु सत्तामात्रेण तेन निवेद्यन्ते । नापि भावानां ज्ञानापरिच्छेद्य-

१. भावनानि यत्ता०—जै०, पा० । २. ०ज्ञानं—पा० । ३. इत्यपर्यन्तया—पा० ।

स्वभावतयाऽनन्तत्वमभ्युपेतम्, येन ज्ञायमानतया तेषामन्तवत्त्वं प्रसज्येत; किन्तु देशवितानापर्यन्ततयाऽनन्तो भाजनलोकः, सत्त्वलोकस्तु सङ्ख्यानापर्यन्ततयापि। न च देशावष्टम्भाय पर्यन्तत्वे सति[1] ग्राह्यविरोधः कश्चिद्, येनाग्राह्यता भवेत्। यदि पर्यन्ततया न संगृह्णाति, कथं सर्वज्ञः स्यादिति चेद्? अत एव। यत एवासौ पर्यन्ततया न गृह्णाति तत एव सर्वज्ञो भवति; अन्यथाऽनन्तं वस्त्वन्तवत्त्वेन गृह्णन् भ्रान्तो भवेत्। तथा हि—यदस्ति तदस्तित्वेन, यन्नास्ति तन्नास्तित्वेन गृह्णन् सर्वविदुच्यते। न च सत्त्वभाजनलोकस्य पर्यन्तोऽस्ति। तस्मात पर्यन्तमविद्यमानमविद्यमानतया[2] गृह्णन्, सर्वज्ञज्ञानपरिच्छेदकृतं तु पर्यन्तं विद्यमानं विद्यमानतया पश्यन् कथमसर्वज्ञो नाम!

स्यादेतत्—निराकारज्ञानपक्षे विषयग्रहणमनुपपन्नम्; सर्वत्राविशिष्टत्वात् तस्य, तेन प्रतिकर्मविभागानुपपत्तेः; अतो निराकारपक्षोऽनुपन्यसनीय एव, सर्वदा तस्य दुष्टत्वादिति? तदेतदसम्यक्; [ G. 931 ] न हि सर्वज्ञज्ञानस्य प्रतिकर्म विभाग इष्यते, तस्य सर्ववस्तुविषयत्वात्; यतो न तन्नीलस्यैव संवेदनम्, पीतस्यैव वा, अपि तु सर्वस्यैवेतीष्टम्। यस्य ह्यर्वाग्दर्शनस्य ज्ञानं प्रतिनियतार्थविषयम्, तं प्रति निराकारज्ञानपक्षे सर्वत्राविशेषात् प्रतिकर्मविभागानुपपत्तिर्दोष उच्यते। तथा हि—'नीलस्येदं संवेदनं न पीतस्य' इति नियमाभावात् सर्वस्य पृथग्जनस्य सर्वज्ञत्वप्रसङ्गापादनं क्रियते, सर्वज्ञस्य तु तदिष्टमेवेति कस्य किमनिष्टमापद्यताम्! तेन सर्वज्ञावस्थायां निराकारं योगबलेनोत्पद्यमानमविरुद्धमेव। विभागेन हेयोपादेयवस्तुपरिज्ञानं न स्यादिति चेत्? न; यदि हि युगपदनन्ते वस्तुनि प्रतिभासमाने हेयोपादेयवस्तुनः प्रतिभासविरोधः स्यात्, अविरोधे चान्यैः प्रतिभासमानस्य तस्य हेयोपादेयवस्तुनः तत्त्वप्रच्युतिः स्यात्, प्रच्युततत्त्वस्यापि[3] विभागेनावभासनमेव[4] वा न स्यात्, विरुद्धावभासनस्यापि[5] यदि परिच्छेदकः शुद्धलौकिको विमर्शप्रत्ययः पृष्ठभावी नोत्पद्यते, तदैतत्सर्वं स्याद् वक्तुम्; यावता विश्वस्मिन्

१. ०ऽसति–गा०। २. पर्यन्तं गमनकृतमविद्यमानतया–जै०, पा०।
३. प्रच्युतत्त्वस्यापि–पा०। ४. ०भासमेव–पा०।
५. निरुक्तावभास०–गा०।

जगत्यवभासमाने तदपि हेयोपादेयं वस्त्वविरुद्धप्रतिभासमप्रच्युतात्मतत्त्वं विरुद्धमेवावभासते[1]। पश्चाच्च सर्वज्ञज्ञानबलोत्पन्नशुद्धलौकिकप्रत्यवमर्शप्रत्ययेन परिच्छिद्यत एवेति कथं विभागेन तदपरिज्ञानं नाम ! तदेवं **निराकारज्ञानपक्षे** तावदचोद्यमेतदिति प्रतिपादितम् ।

अथ **साकारज्ञानवादपक्षे** चोद्यते । तत्राप्यविरोध एव । तथा हि—यथैव तदनन्तं वस्त्वनन्ताकारानुगतमात्मसत्त्वं सत्तामनुभवति, तथैव तत् सार्वज्ञं चेतोऽपरिमितवस्तुगताकारोपग्रहेणोत्पद्यमानमविरुद्धमेव; एकस्य ज्ञानस्यानेकवस्त्वाकारोपग्रहेणोत्पत्त्यविरोधात् । एकस्यानेकाकारविरोध एवेति चेत् ? न; आकाराणामसत्यत्वात् । यदि ह्येकस्य पारमार्थिका आकारा भवेयुः, तदा स्यादेकस्य[2] विचित्रत्वविरोधः[2], यावता अस्य[3] भूता[3] एवाकारा इतीष्टम् । यद्येवम्, [4]भ्रान्तज्ञानसञ्ज्ञित्वात् भ्रान्तः प्राप्नोति सर्वज्ञ इति चेत्, न; यथाभूतपरिज्ञानाददोष एषः । यदि ह्यसत्यं सत्यत्वेन गृह्णीयात्, तदा भ्रान्तः स्यात्; यदा त्वसत्यभूतानाकारानसत्यत्वेनैव जानाति तदा कथं भ्रान्तो भवेत् ! अथाव्यतिरिक्तज्ञानारूढाकारग्रहणे सत्यर्थेषु दृष्टादिव्यवहारं कुर्वन् कथं न[5] भ्रान्त[5] इति चेत् ? न; सम्यगुपायपरिज्ञानात् । यदि ह्युचितं ग्रहणोपायमपास्योपायान्तरेणामुख्येनार्थं[6] गृह्णीयात्, तदा भ्रान्तो भवेत् । यावता **साकारज्ञानवादिपक्षे** ज्ञानस्याकारानुभवव्यतिरेकेण नान्योऽर्थग्रहणव्यापारोऽस्ति, तत् कथमुचितेन ग्रहणव्यापारेणार्थं गृह्णन् भ्रान्तो भवेत् ! अतो ज्ञेयवदेकस्यापि [G. 932] ज्ञानस्यानन्तवस्तुगताकारोपग्रहेणोत्पत्तेरनन्तं वस्तु तेन व्याप्तमित्युच्यते । येनैव चात्मना ज्ञानात्मनि भावाः समारोहन्ति, तेनैव तत्पृष्ठभाविपरामर्शचेतसा परिच्छिद्यन्ते न च सार्वज्ञचेतसि परिमितभेदानुगताः समारोहन्ति भावाः, किं तर्हि ? यावत् किञ्चिदस्तित्वमनुभवति तत् सर्वमेव समारोहति । सर्वस्यैव सर्वज्ञानोपादानं प्रत्यालम्बनभावेनाप्रतिबद्धशक्ति-

१. निरुक्तमेवाव०—गा। २-२. स्याद्विचित्र०—पा०, गा० ।
३-३. अस्वभूता—गा० ।
४. ०ज्ञानमसञ्ज्ञित्वाद्—जै०, ०ज्ञानसञ्ज्ञित्वा—पा० ।
५-५. भ्रान्त—पा०, अभ्रान्त—गा० । ६. ०मुख्येनार्थे—जै० ।

यद् यदिच्छति बोद्धुं वा तत्तद् वेत्ति नियोगतः ।
शक्तिरेवंविधा तस्य प्रहीणाचरणो ह्यसौ ॥ ३६२७ ॥

स्वेच्छासर्वज्ञमतसमर्थनम्

युगपत् परिपाट्या वा स्वेच्छया प्रतिपद्यते ।
लब्धज्ञानं च सत्त्वो हि सक्षणैर्ह्यादिभिः प्रभुः ॥ ३६२८ ॥
यद्वा षोडशभिश्चित्तैश्चतुःसत्यस्वभावकम् ।

---

त्वात्[1] । मनोविज्ञानस्य च सर्वार्थविषयत्वात् । अतः सार्वज्ञचेतसः परिमितवस्त्वाकारोपग्रहणेऽननुपपत्तेः[2], पृष्ठलब्धेन च शुद्धलौकिकेन परामर्शप्रत्ययेन देशपर्यन्तवर्त्तित्वेनापरिच्छेदात् कथम् 'इयन्तः' इति परिच्छेदो भवेत्, येनान्तवत्त्वं स्यात् । यदि नाम [3]प्रतिभासनादन्यन्नास्तीत्येवं परामर्शो जातः, तथापि नान्तवत्त्वप्रसङ्गः । तथा हि— यदि प्रतिभासमानमन्तवदेव निर्विकल्पसर्वज्ञचेतसि प्रतिभासेत, तदा तत्पृष्ठलब्धेन परामर्शचेतसा अनन्तत्वं भावानां परिच्छिद्यत । तद्व्यवच्छेदाच्चानन्तत्वहानिर्भवेत्[4]; यावता परिभासमानं[5] वस्तु सर्वज्ञचेतस्यनन्तमेव प्रतिभासते; सर्वज्ञस्याप्रतिहतशक्तित्वात्[6] । तस्मादन्यदप्रतिभासमानमन्तवदेव । तस्यैव च परामर्शचेतसा व्यवच्छेदः क्रियत इति सुतरामेव भवताऽनन्तत्वं भावानामुपपादितमिति यत्किञ्चिदेतत् ।

ये तु पुनः "सर्वमेव योगिविज्ञानमनालम्बनं सत्यस्वप्नदर्शनवद् वस्तुसंवादितया प्रमाणम्" इति प्रतिपन्नाः, तान् प्रत्यन्तवत्त्वचोद्यं* दूरीकृतावकाशमेवेत्यलं बहुना ॥ ३६२६ ॥

यैः स्वेच्छासर्वज्ञो वर्ण्यते, तन्मतेनाप्यसौ न विरुध्यत इत्यादर्शयन्नाह— यद्यदित्यादि ॥ ३६२७–३६२८ ॥

यद्वेत्यादिना क्रमज्ञानपक्षेऽप्यविरोधमाह । [G. 933] षोडशभिश्चित्तैरिति क्षान्तिज्ञानैः । अष्टौ क्षान्तयः—दुःखे[7] धर्मज्ञानक्षान्त्यादयः[7], अष्टौ

---

१. प्रत्यालम्बनभावो०—जै० । २. अपरिमित०—गा० । ३. प्रतिभासमाना०—गा० । ४. ०नन्तहानि०—पा० । ५. परिहासमानं—जै० । ६. सर्वस्याप्रति०—पा० । ७–७. दुःखधर्म०—पा०, गा०; एवमुपर्यपि ।

क्रमेण वेत्ति विज्ञेयं सर्वं सर्वविदित्यतः ॥ ३६२९ ॥
तत्र तादृशि विज्ञाने क्रमेण भवति प्रभोः ।
लवमात्रोऽपि नापेक्ष्यः किमङ्गाब्दशतावधिः ॥ ३६३० ॥
स्वभावेनाविभक्तेन यः सर्वमवबुध्यते ।
स्वरूपाण्येव भावानां सर्वेषां सोऽवबुध्यते ॥ ३६३१ ॥
सात्मकाक्षणिकादिभ्यो[1] यद्व्यावृत्तं स्वलक्षणम् ।
शमोत्प्रेक्षानिमित्तत्वात् सामान्यं तदिहोच्यते ॥ ३६३२ ॥
तद्ग्राहकं च विज्ञानं भावनाबलभावि यत् ।
योगीशानामभिव्यक्तं तत्स्वलक्षणगोचरम् ॥ ३६३३ ॥

---

च ज्ञानानि—दुःखे धर्मज्ञानानीति; 'षोडशभिन्नोऽयं सत्याभिसमयः' इति वचनात् । लवमात्रोऽपीति । 'कलापर्यन्तः[2] क्षणः, विंशक्षणशतमेकः तत्क्षणः, षष्टि तत्क्षणा एको लवः' इति समयः । अङ्गेत्यामन्त्रणे । अब्द इति संवत्सरपर्यायः ॥ ३६२९–३६३० ॥

"स्वभावेनाविभक्तेन" (तत्त्व० ३२५०) इत्यादावाह—स्वभावेनेत्यादि ॥ ३६३१ ॥

ननु योगिनामनाश्रवं ज्ञानं शास्त्रे सामान्यविषयमेवोपवर्ण्यते, न तु स्वलक्षणविषयम्, तत् कथं सामान्यविषयेण योगिचेतसा भावानां स्वरूपाण्येव च बुध्यन्ते? इत्यत आह—सात्मकेत्यादि[3] । तदेव हि स्वलक्षणं विजातीयव्यावृत्तमभिन्नाकारप्रत्ययहेतुतया शास्त्रे सामान्यलक्षणमित्युच्यते, अतस्तद्ग्राहकं योगिज्ञानं भावनाबलेन स्फुटप्रतिभासमुत्पद्यमानं स्वलक्षणगोचरमेवेत्यविरुद्धमेतत्[4]—यत्[5] सामान्यगोचरं तत् कथं स्वलक्षणग्राहि[6] तद्भवतीति ।

यच्चोक्तम्—"तदेकाकारविज्ञानम्" (तत्त्व० ३२५२) इत्यादि, तत्सर्वमेतेनैव प्रत्युक्तम्; स्वलक्षणविषयत्वाद् योगिज्ञानस्येति ॥ ३६३२–३६३३ ॥

---

१. स्वात्मकाक्षणि०—पा० । २. कालपर्यन्तः—पा० ।
३. स्वात्मकेत्यादि—पा० । ४. विरुद्धमेव—पा०, गा० ।
५. तद्यत्—पा०, गा० । ६. न स्वलक्षण०—गा० ।

तत्त्वान्यत्वाद्यनिर्देश्यं यत्परैश्च प्रकल्पितम् ।
सामान्यं तस्य नैतेन ग्रहणं योगिचेतसा ॥ ३६३४ ॥
अविकल्पमविभ्रान्तं तद्योगीश्वरमानसम् ।
विकल्पविभ्रमाक्रान्तं तद्ग्रहे च प्रसज्यते ॥ ३६३५ ॥
विकल्पात्मा च सामान्यमवाच्यं यत् प्रकीर्त्तितम् ।
नित्यानुगतिरूपं तन्नीरूपं प्रतिपादितम् ॥ ३६३६ ॥

---

अथ यत्तत् सांवृतं तत्त्वान्यत्वादिभिराकारैरनिर्देश्यं सामान्यमस्माभिरुपवर्णितम्, यच्च परैस्तैर्थिकैः पारमार्थिकमेव प्रकल्पितम्, तद्ग्राहित्वेन योगिज्ञानस्य स्वलक्षणविषयत्वं साध्यते, तदसिद्धमित्यादर्शयन्नाह—**तत्त्वे**त्यादि । आदिशब्देन नित्यत्वादिभिरनिर्देश्यमिति ग्रहीतव्यम् ॥ ३६३४ ॥

कस्मात् तेन तस्य ग्रहणं नास्ति ? इत्याह—**अविकल्प**मित्यादि । [ G 934 ] योगिज्ञानमविकल्पाभ्रान्ततया प्रत्यक्षं प्रमाणमिष्यते । यदि च तद् यथोक्तसामान्यविषयं स्यात्, तदा सांवृतार्थविषयत्वाद् विकल्पाक्रान्तं प्राप्नोति । परपरिकल्पितालीकसामान्यविषयत्वाद् विभ्रमाक्रान्तं च प्रसज्यते । यद्वा—प्रत्येकमुभयविषयत्वे दोषद्वयमापतति ॥ ३६३५ ॥

एवमध्यारोपितालीकार्थविषयत्वाद् विकल्पविभ्रमाक्रान्तं तत् प्रसज्यत इति प्रतिपादितम् । इतश्च विकल्पविभ्रमाक्रान्तं तद्ग्राहि प्रसज्यत इति भङ्ग्यन्तरेण प्रतिपादयन्नाह—**विकल्पात्मा चे**त्यादि । यदेतदनन्तरोक्तमवाच्यम् = तत्त्वान्यत्वाद्यनिर्देश्यं सामान्यमुक्तम्, तद्विकल्पस्यात्मेति यद् यस्मात् प्रकीर्तितम् = प्रतिपादितमन्यापोहे । तस्मात् तद्ग्रहे विकल्पविभ्रमाक्रान्तं प्रसज्यत इति प्रकृतेन सम्बन्धः । तथा हि—विकल्पात्मतया सामान्यस्य तद्ग्राहियोगिज्ञानं विकल्पात्मकमेव स्यात्; तादात्म्येनैव तस्य ग्रहणात् । विकल्पस्य च प्रकृत्या स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तेर्विपर्ययस्तत्त्वमिति विभ्रमाक्रान्तं च प्रसज्येत । यच्च परपरिकल्पितं सामान्यं नित्यानुगतिरूपम्, तदपि **सामान्यपरीक्षायां** नीरूपस्वभावमेव प्रतिपादितमिति तद्ग्रहे स्फुटतरमेव विकल्पविभ्रमाक्रान्तत्वमासज्यते ॥ ३६३६ ॥

सहेतु सकलं कर्म ज्ञानेनालौकिकेन यः ।
समाधिजेन जानाति स सर्वज्ञोऽपदिश्यते ॥ ३६३७ ॥
पुरस्तादनुमानेन तस्य सत्ता प्रसाधिता ।
प्रमाणमस्य सद्भावे तदस्तीत्यस्ति तादृशः ॥ ३६३८ ॥
युगपत्परिपाट्या वा ज्ञानं कार्यात् प्रकाशितात् ।
सामर्थ्यमपि तस्यास्ति देशनां कुरुते यदा ॥ ३६३९ ॥
स्वभ्यस्तधर्मनैरात्म्या यस्येयं देशनाऽमला ।
साधिता सर्वशास्त्रेण[1] सर्वमानैरबाधिता ॥ ३६४० ॥
संसार्यनुचितज्ञाना केशवादेरगोचरः ।
शिरोभिरर्च्यते भक्त्या[2] या चातीव मनीषिभिः ॥ ३६४१ ॥
समस्तदुरितारातिवर्गभङ्गविधायिनी ।
चित्राभ्युदयनिष्पत्तिनिर्वाणप्राप्तिकारणम् ॥ ३६४२ ॥
लब्धासाधारणोपायोऽशेषपुंसां विलक्षणात्[3] ।

---

यच्चोक्तम्—"सहेतु सकलं कर्म" (तत्त्व० ३२५५) इत्यादि, तत्राह—सहेत्वित्यादि ॥ ३६३७–३६३८ ॥

"युगपत् परिपाट्या च" ( तत्त्व० ३२५७ ) इत्यादावाह—युगपदित्यादि । [ G. 935 ] सुबोधम् ॥ ३६३९ ॥

"लब्धासाधारणोपायः" (तत्त्व० ३२५९) इत्यादावाह— स्वभ्यस्तधर्मनैरात्म्येत्यादि । विस्तरः[4]—सर्वशास्त्रेणेति । सकलेनामुना तत्त्वसङ्ग्रहेण । संसार्यनुचितज्ञानेति संसारिणामनुचितम् = असहजं संसार्यनुचितं तत् तादृशं ज्ञानं यस्यां देशनायां सा तथोक्ता । केशवादेरगोचर इति । स्वलिङ्गेनैव देशनासमानाधिकरणमेतत् । समस्तदुरितारातिवर्गभङ्गविधायिनीति । दुरितान्येवारातयस्तेषां वर्गः = समूहः, तस्य भङ्गं विधातुं शीलमस्या इति विग्रहः । चित्राभ्युदयनिष्पत्तिनिर्वाणप्राप्तिकारणमिति । कारणशब्दः प्रत्येकमभि-

---

१. सर्वशास्त्रेषु—पा० । २. शक्त्या—पा०, गा० ।
३. विशेषणः—पा०; विलक्षणः—गा० । ४. पा०, गा० पुस्तकयोर्नास्ति ।

स एकः सर्वविन्नाथ इत्येतत् सप्रमाणकम् ॥ ३६४३ ॥
इत्थं यदा च सर्वज्ञः कश्चिदेवोपपद्यते ।
धर्माद्यधिगमे हेतुः पौरुषेयं तदा वचः ॥ ३६४४ ॥
निराकारादिचिन्ता तु सर्वज्ञे नोपयुज्यते ।
यथा हि भवतां ज्ञानं क्वचिदर्थे तथा परम् ॥ ३६४५ ॥

श्रीशान्तरक्षितविरचितस्तत्त्वसंग्रहः समाप्तः

---

सम्बध्यते । चित्राभ्युदयनिष्पत्तिकारणं चेत्यर्थः ॥ ३६४०–३६४३ ॥

"इत्थं यदा न" (तत्त्व० ३२६०) इत्यादावाह—इत्थमित्यादि । कश्चिदेवेति । सुगत एव, न कपिलादिः । यथोक्तं प्रागित्यभिप्रायः । यश्च निराकारसाकारज्ञानविकल्पेन दोष उक्तः, तदपि पूर्वमेवास्माभिः प्रतिविहितम् ॥ ३६४४ ॥

ननु चोक्तम्—

"अनिर्भासं सनिर्भासमन्यनिर्भासमेव च ।
विजानाति न विज्ञानं बाह्यमर्थं कथञ्चन ॥" ( तत्त्व० १९९८ ) इति,

तत् कथमुभयपक्षाश्रयणेऽपि दोषाप्रसङ्ग उच्यते ?—इत्येतदाशङ्क्य आह—निराकारादीत्यादि । [ G 936 ] येयमस्माभिर्विज्ञानवादस्थितैर्निराकारचिन्ता प्रागकारि, सा साम्प्रतं बाह्यार्थाभिनिविष्टान् भवतो मीमांसकान् प्रति बहिरर्थमभ्युपेत्य सर्वज्ञे प्रतिपाद्यमाने भवतां बहिरर्थवादिनां कथमपि नोपयुज्यत एव कर्तुम् । कथम् ? इत्याह—यथा हीत्यादि । अवश्यं हि भवद्भिर्बहिरर्थस्य साकारेण वा निराकारेण वा ज्ञानेन ग्रहणमुपवर्णनीयम्, अन्यथा बहिरर्थोच्छेदः स्यात् ; ततश्च यथा = येन प्रकारेण भवतां क्वचिदर्थे ज्ञानं प्रवर्त्तते, तथा तेनैवाकारेण परम् = उत्कृष्टम् सार्वज्ञमिति सम्बध्यते, प्रवर्तिष्यते इत्यचोद्यमेतदिति ॥ ३६४५ ॥

इति कुशलमदभ्रं यन्मयाप्तापि शुभ्रं निरुपमजिनलक्ष्मीसद्मतामेत्य नित्यम् ।
सकलजनमनांसि प्रीणयन् दीप्तकान्तिः सुगतकमलशीलस्तेन सर्वोऽस्तु लोकः ॥

इत्यतीन्द्रियदर्शिपुरुषपरीक्षा

कमलशीलविरचिता[1] पञ्जिका समाप्ता[1]

---

१–१. कमलशीलाभिधानं पुस्तकं समाप्तमिति—जै० ।

# तत्त्वसंग्रहकारिकासूची

शान्तरक्षितपादैर्या ग्रन्थेऽस्मिंस्तत्त्वसंग्रहे ।
निबद्धाः कारिकास्तासां सूचीयं क्रमशालिनी ॥

तत्त्वसंग्रहस्थ-

# परकारिकाणां सूची

**ग्रथिता ग्रन्थकर्त्रेह परेषां कारिका अपि ।**
**स्वकृतेरविभागेन, तासां सूची प्रदर्श्यते ।।**

| त० क्र० | कारिका | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| २३३३ | अंशो ह्येतस्य जात्याख्यो | श्लो० वा० | श० नि० | २५२ |
| ९१४ | अगोनिवृत्तिः सामान्यं | ,, | अपोह० | १ |
| ९४० | अगोशब्दाभिधेयत्वं | ,, | अपोह० | ८१ |
| १३१० | अग्निधूमान्तरत्वे तु | ,, | अनुमान० | १४५ |
| २२३८ | अज्ञात्वा कमसौ शब्दं | ,, | श० नि० | ३४६ |
| २१७२ | अतोऽतीन्द्रिययैवेते | ,, | श० नि० | ४५ |
| २९१५ | अतो यत्रापि मिथ्यात्वं | ,, | चो० सू० | ८८ |
| २२१५ | अत्र ब्रूमो यदा तावद् | ,, | श० नि० | १८० |
| २०६३ | अथ यद्ग्राहकं रूपे | ,, | शून्य० | १७२ |
| ९४९ | अथान्यथा विशेष्येऽपि | ,, | अपोह० | ९० |
| ९७१ | अथान्यापोहवद् वस्तु | ,, | अपोह० | १२० |
| २२३६ | अथान्योऽपि स्वभावेन | ,, | श० नि० | २४४ |
| २१८५ | अथापीन्द्रियसंस्कारः | ,, | श० नि० | ६९ |
| २१५८ | अथाप्याकाशमाधारः | ,, | श० नि० | ५४ |
| ९३६ | अथासत्यपि सारूप्ये | ,, | अपोह० | ७६ |
| २३१२ | अथास्मदिष्टः पक्षः स्यात् | ,, | श० नि० | ३२१ |
| २२२१ | अधिष्ठानानृजुस्थत्वात् | ,, | श० नि० | १८७ |
| ९७८ | अनन्यापोहशब्दादौ | ,, | अपोह० | १४४ |
| २३१३ | अनित्यं तच्च सर्वेषा | ,, | श० नि० | ३२२ |
| २३३४ | अनित्यता विकल्प्यैवं | ,, | श० नि० | ३५६ |
| २३१४ | अनित्यत्वं च नाशित्वं | ,, | श० नि० | ३२६ |
| २२२४ | अनेकदेशवृत्तौ वा | ,, | श० नि० | १९० |
| २२६९ | अन्धानन्धसमीपस्थः | ,, | सम्ब० प० | ३७ |
| २३३२ | अन्यत्वे धर्म्यसिद्धेर्नो | ,, | श० नि० | ३५१ |

| व० क्र० | कारिका | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| २८७२ | नायं लोकोऽस्ति कौन्तेय | भ० गी० | चतुर्थ० | ४० |
| २१८२ | नावश्यं श्रोत्रमाकाशं | श्लो० वा० | श० नि० | ६७ |
| १२८ | नाशोत्पादासमालीढं | ,, | श० नि० | ४३० |
| ३५०४ | निराकरणवच्छक्या | ,, | चो० सू० | ११७ |
| २१७१ | नित्यं कार्यानुमेया च | ,, | श० नि० | ४४ |
| १४६० | निर्ज्ञातशक्तेरप्यस्य | वा० प० | ब्र० का० | ३३ |
| २१८९ | निष्प्रदेशोऽपि चात्मा नः | श्लो० वा० | श० नि० | ७३ |
| ९१६ | नेष्टोऽसाधारणस्तावद् | ,, | अपोह० | ३ |
| ४८० | नैरात्म्यवादपक्षे तु | ,, | आत्म० | ३२ |
| २१४८ | नैव वा ग्रहणे तेषां | ,, | स्फोट० | ४० |
| २२८२ | पदं वर्णातिरिक्तं तु | ,, | श० नि० | २८३ |
| २३३५ | पदार्थपदसम्बन्ध० | ,, | वाक्या० | १ |
| २३०२ | परधर्मेऽपि चाङ्गत्वं | ,, | श० नि० | ३०६ |
| १३४९ | परिच्छेदफलत्वेन | ,, | प्र० सू० | ७८ |
| २२९० | परेणोक्तान् ब्रवीमीति | ,, | श० नि० | २९३ |
| २२२८ | पर्यायादविरोधश्चेत् | ,, | श० नि० | २०० |
| २२२६ | पर्यायेण यथा चैको | ,, | श० नि० | १९८ |
| २१३३ | पार्थिवद्रव्यसत्त्वादि० | ,, | श० नि० | ३६० |
| १५९१ | पीनो दिवा न भुंक्ते चे० | ,, | अर्थापत्ति० | ५१ |
| २१८८ | पुंसां देहप्रदेशेषु | ,, | श० नि० | ७२ |
| १२८८ | पुनः पुनर्विकल्पेऽपि | ,, | प्र० सू० | १२५ |
| २२८० | पुरुषाधीनता चास्य | ,, | श० नि० | २८० |
| ४८४ | पूर्वक्षणविनाशे च | ,, | श० नि० | ४२८ |
| ९३९ | पूर्वोक्तेन प्रबन्धेन | ,, | अपोह० | ७९ |
| २०१५ | प्रकाशकत्वं बाह्येऽर्थे | ,, | शून्य० | १८७ |
| १५४० | प्रतिज्ञार्थैकदेशत्वात् | ,, | उपमान० | ४४ |
| २७४८ | प्रतिसङ्ख्यानिरोधो यो | अभि० को० | प्र० को० | ६ |
| २३२२ | प्रतिसङ्ख्याप्रतिसङ्ख्या० | श्लो० वा० | श० नि० | २२ |
| १४४२ | प्रत्यक्षदृष्टसम्बन्धं | ,, | अनुमान० | १४१ |
| १६३६ | प्रत्यक्षद्रव्यवर्तिन्यो | ,, | श० नि० | ३९५ |
| १६४८ | प्रत्यक्षादेरनुत्पत्तिः | ,, | अभाव० | ११ |

| त० क्र० | कारिका | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| २३४२ | सम्बद्धानुगुणोपायं | प्र० वा० | तृ० प० | २१४ |
| २२४७ | सम्बन्धकथनेऽप्यस्य | ,, | श० नि० | २५९ |
| २३३८ | सम्बन्धाकरणन्यायात् | ,, | वाक्या० | ३६५ |
| २२६३ | सम्बन्धाख्यानकाले च | ,, | सम्ब० प० | ३० |
| २६४१ | सम्बन्धाख्यानकाले तु | ,, | सम्ब० प० | ३० |
| २१३५ | सम्मुखानेकसामान्य० | श्लो० वा० | श० नि० | ३६३ |
| २१३८ | सम्भाव्यतेऽस्य नाशित्वं | ,, | वाक्या० | ४४२ |
| ३१७२ | सर्वः सर्वं न जानाति | म० भा० | व०प०७२ | ८ |
| ३१९० | सर्वज्ञाः बहवः कल्प्याः | श्लो० वा० | चो० सू० | १३५ |
| ३१८५ | सर्वज्ञो दृश्यते तावत् | ,, | चो० सू० | ११७ |
| ३१९२ | सर्वज्ञो नावबुद्धश्च | ,, | चो० सू० | १३६ |
| ३१९१ | सर्वज्ञोऽयमिति ह्येवं | ,, | चो० सू० | १३४ |
| २७९२ } ३२८५ } | सर्वदा चैव पुरुषाः | ,, | चो० सू० | १४४ |
| २३०७ | सर्वलोकप्रसिद्धया च | ,, | श० नि० | ३१७ |
| २६६५ | सर्वत्रामनभिज्ञत्वात् | ,, | सम्ब० प० | ४१ |
| २१७६ | स संयोगविभागौ च | ,, | श० नि० | १२१ |
| १५३२ | सादृश्यस्य च वस्तुत्वं | ,, | उपमान० | १८ |
| २९०१ | साधनान्तरजन्या तु | ,, | चो० सू० | ७८ |
| ९७५ | साध्यत्वप्रत्ययश्चात्र | ,, | अपोह० | १४१ |
| ९६९ | सामानाधिकरण्यं च | ,, | अपोह० | ११८ |
| १५३१ | सामान्यवद्धि सादृश्यं | ,, | उपमान० | ३५ |
| ९२० | सामान्यं वस्तुरूपं हि | ,, | अपोह० | ३८ |
| २१५५ | सा हि स्याच्छब्दसंस्कार० | ,, | श० नि० | ५२ |
| ९४२ | सिद्धश्चागौरपोह्येत | ,, | अपोह० | ८३ |
| २६५ | सुखदुःखाद्यवस्थाश्च | ,, | आत्म० | २६ |
| २१९९ | सूर्यमस्य यथा चक्षुः | ,, | श० नि० | १५१ |
| २४८ | सैवेति नोच्यते बुद्धिः | ,, | श० नि० | ४१० |
| २१६५ | स्थिरवाय्वपनीत्या च | ,, | श० नि० | ६२ |
| २२६ | स्यातामत्यन्तनाशे हि | ,, | आत्म० | २३ |
| २८१० | स्वतः प्रामाण्यमन्येषां | ,, | चो० सू० | ४७ |
| २८११ | स्वतः सर्वप्रमाणानां | ,, | चो० सू० | ४७ |

| त० क्र० | कारिका | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| २२५२ | स्वतो नैवास्ति शक्तत्वं | श्लो० वा० | सम्ब० प० | १२ |
| २१५३ | स्वतो ह्रस्वादिभेदस्तु | ,, | स्फोट० | ५० |
| २२१६ | स्वदेशमेव गृह्णाति | ,, | श० नि० | १८१ |
| १६७१ | स्वरूपपररूपाभ्यां | ,, | अभाव० | १२ |
| ९४६ | स्वरूपसत्त्वमात्रेण | ,, | अपोह० | ८७ |
| २४३ | स्वरूपेण यथा वह्निः | ,, | श० नि० | ४०५ |
| २६७ | स्वरूपेण ह्यवस्थानाम् | ,, | आत्म० | ३१ |
| २३०३ | स्ववाक्यादिविरोधश्च | ,, | श० नि० | ३१३ |
| १३५० | स्वसंवित्तिफलत्वं चेत् | ,, | प्र० सू० | ७९ |
| २३२५ | स्वाभाविको विनाशस्तु | ,, | श० नि० | २६ |
| २१२१ | ह्यस्तनोच्चारणो वापि | ,, | श० नि० | ४१६ |



कमलशीलीयपञ्जिकान्तःपाति–

# उद्धरणसूची

श्रीमत्कमलशीलेन ग्रन्थग्रन्थिविमुक्तये ।
स्वकीयाः परकीया वा गृहीताः दर्शनोक्तयः ॥
तासां सूचीह निर्दिष्टा ग्रन्थसन्दर्भपूर्विका ।
ग्रन्थालाभे ग्रन्थकर्तुर्नाममात्रमिह स्मृतम् ॥

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ७२५ | अंशो ह्येतस्य जात्याख्यो | श्लो० वा० | श० नि० | ३५२ |
| ९०१ | अकर्तृकत्वसिद्धया च | ,, | चो० सू० | १८६ |
| ७८४ | अग्निरावश्चक्षुः सामानि | वेदः | ... | ... |
| १३४ | अग्निर्दहति नाकाशं | ... | ... | ... |
| ५३५, ७८२ | अग्निहोत्रं जुहुयात् स्वर्गकामः | ... | ... | ... |
| ५८० | अज्ञातेऽर्थे बुद्धेरसिद्धेरर्थ० | शा० भा० | प्रथम० | १.५ |
| ३८५, ४४० | अज्ञेयं कल्पितं कृत्वा | हेतुमु० | ... | ... |
| ५२ | अज्ञो जन्तुरनीशोऽयम् | न्या० वा० | चतुर्थ० | १.२१ |
| ३२५ | अतदात्मकेष्वप्यन्यनिमित्तः प्रत्ययः | प्र० भा० | स० प्र० | |
| ४०६ | अतद्रूपपरावृत्तवस्तु० | ... | ... | ... |
| ६१६ | अतीतं चेद् भिक्षवो रूपं | भगवान् | ... | ... |
| ११८ | अथ निरात्मकमिति कोऽर्थः | उद्द्योतकरः | ... | ... |
| ७७५ | अथ वा प्रतीतिपदार्थको लोके | पा० म० भा० | पस्प० आ० | |
| ७१० | अथ वा शक्त्यर्पणात् क्रमेणापि | आ०दिङ्नागः | ... | ... |
| ८४७ | अथापि स्यादेकस्य सतो | शा० भा० | प्रथम० | १.१५ |
| ३७८ | अदृष्टैरन्यशब्दार्थे | ... | ... | ... |
| ७८३ | अदेङ् | पा० सू० | प्रथम० | १ २ |
| ५२ | अद्रव्यवत्त्वात् परमाणौ | वै० द० | चतुर्थ० | १.७ |
| ८५५ | अध्यात्मादि० | पा० सू० | चतुर्था० | ३.६० |
| १७ | अनवराग्रो हि भिक्षवो | सं० नि० | | १५.१ |
| ८५ | अनादिनिधनं ब्रह्म | वा० प० | ब्रह्म० | १ |
| १६३ | अनित्यत्वेन योऽवाच्यः | प्र० वा० | प्रथम० | २०५ |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| १६२ | अनित्याः सर्वसंस्काराः | भगवान् | ... | ... |
| ४१ | अनुत्पन्ना महामते सर्वधर्माः | ल० सू० | | ८० पृ० |
| ५१६ | अनुमानं ज्ञातसम्बन्धस्य | शा० भा० | प्रथम० | १.५ |
| ३५७ | अनुमानं विवक्षायाः | ... | ... | ... |
| १६ | अनुमानाश्रयो लिङ्गम् | प्र० वा० | प्रथम० | २८७ |
| २१५ | अनेनैव कृतं कर्म | भगवान् (?) | ... | ... |
| ३३७ | अन्यतरकर्मज उभयकर्मजः | वै० द० | सप्तम० | २.१० |
| ५८४ | अन्यथार्थस्य नास्तित्वं | प्र० वा० | चतुर्थ० | २७५ |
| १०३२ | अन्यथैकनिवृत्त्यान्य० | प्र० वा० | तृतीय० | २३ |
| ४२३ | अन्यथैकेन शब्देन | प्र० वा० | तृतीय० | ५० |
| ३४५ | अन्यथैवाग्निसम्बन्धाद् | ... | ... | ... |
| २२९ | अन्यस्मरणभोगादि० | प्र० वा० | प्रथम० | २७१ |
| ४५४ | अन्ये तु अर्थशून्यैः शब्दैरेव | आचार्यः | ... | ... |
| २५६ | अपरस्मिन् परं युगपद० | वै० द० | द्वितीय० | २.६ |
| ३६३ | अपोद्धारे पदस्यायं | ... | ... | ... |
| ३६५, ३७९ | अपोह्यभेदाद्भिन्नार्थाः | ... | .. | ... |
| ४९०, ७०५ | अप्रत्यक्षोपलम्भस्य | ... | ... | ... |
| ५७६ | अप्सु गन्धो रसश्चाग्नौ | श्लो० वा० | अभाव० | ६ |
| ३९० | अभक्ष्यो ग्रामशूकरः | ... | ... | ... |
| ५७४ | अभावोऽपि नास्तीत्यर्थस्या० | शा० भा० | प्रथम० | १.५ |
| ७३८ | अभिघातेन प्रेरिता वायवः | शा० भा० | पञ्चम० | १.१३ |
| ११२१ | अभिज्ञातमभिज्ञेयं | ... | ... | ... |
| ६६३ | अभ्यासयोगेन शुभाशुभानि | जा० मा० | पञ्चदश० | १ |
| ८६६ | अम्बाम्बेति यदा बालः | वा० प० | ब्रह्म० | १५२ |
| ४८९ | अर्थक्रियार्थं हि सर्वः प्रमाणम् | आचार्यः | ... | ... |
| १९१, ५६४ | अर्थक्रियाऽसमर्थस्य | प्र० वा० | तृतीय० | २१० |
| ४२७ | अर्थजात्यभिधानेऽपि | वा० प० | तृतीय० | १.११ |
| ९३९ | अर्थस्यासम्भवेऽभावात् | ... | ... | ... |
| ४०९ | अर्थान्तरनिवृत्त्या कश्चिदेव | आचार्यः | ... | ... |
| ५०० | अर्थापत्तेश्च शाबर्याः | ... | ... | ... |
| १०६ | अवनिजलानिलमनांसि विप्रतिपत्ति० | अविद्धकर्णः | ... | ... |
| ३४१ | अवाचकत्वे शब्दानां प्रतिज्ञाहेत्वोः | उद्द्योतकरः | ... | ... |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ८०९ | अविनाशी वा अरेऽयमात्मा | बृ० उ० | चतुर्थ० | ५.१४ |
| ५० | अविभागाद्वैश्वरूप्यस्य | सां० का० | | १५ |
| ८०८ | अशीर्यो न हि शीर्यते | बृ० उ० | चतुर्थ० | ५.१५ |
| २०४, ६७९ | असतः प्रागसामर्थ्यात् | प्र० वा० | द्वितीय० | २४६ |
| २३ | असदकरणादुपादानग्रहणात् | सां का० | | ९ |
| ४१७ | असम्भवो विधेः | हेतुमु० | ... | ... |
| २१५ | अस्ति कर्मास्ति फलं | भगवान् | ... | ... |
| ६३१ | अस्ति तत्कर्म यत्क्षीणं | भगवान् | ... | ... |
| १६४ | अस्ति सत्त्व उपपादकः | दी० नि० | शील० | १.१ |
| २२७ | अस्थिरत्वाच्चित्तस्य न कर्मभिः | उद्द्योतकरः | ... | ... |
| | | | | |
| ७०५ | आकारवान् बाह्योऽर्थः | शा० भा० | प्रथम० | १.५ |
| ३४७ | आकृतिर्जातिलिङ्गाख्या | न्या० द० | द्वितीय० | २.७० |
| ५५३ | आगमात् सामान्येन प्रतिपद्यते | अविद्धकर्णः | ... | ... |
| १७९ | आत्मलाभानन्तरविनाशी क्षणः | ... | ... | ... |
| १६५ | आत्मानमनभ्युपगच्छता | उद्द्योतकरः | ... | ... |
| १०५ | आत्मेति पदं शरीरेन्द्रियमनो० | उद्द्योतकरः | ... | ... |
| ७८२ | आद् गुणः | पा० सू० | षष्ठा० | १.८७ |
| ८९६ | आमन्द्रैरिन्द्र हरिभिर्याहि | वेदः | ... | ... |
| २५२ | आश्रयाश्रितधर्मनिर्देशमात्रमेतत् | उद्द्योतकर० | ... | ... |
| ९८० | आसीदिदं तमोभूतम् | ... | ... | ... |
| | | | | |
| | इच्छादयः क्वचिदाश्रिताः | शङ्करस्वामी | ... | ... |
| २५७ | इत इदमिति यतस्तद्दिशो | वै० द० | द्वितीय० | २.१२ |
| ४५० | इतिकर्तव्यता लोके | वा० प० | ब्रह्म० | १२१ |
| १४ | इति हि भिक्षवोऽस्ति कर्मफलं | ल० सू० | दशम० | १८५ |
| ७०१, ९९९ | इत्थम्भूतलक्षणे | पा० सू० | द्वितीय० | ३.२१ |
| १८ | इत्येते, आनन्द, पौराणा | दी० नि० | शील० | ३.३४ |
| ३३७ | इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम् | न्या० द० | प्रथम० | १.४ |
| ७०३ | इह पीतद्विचन्द्रादिज्ञाने व्यभिचार० | कुमारिलः | ... | ... |
| ६६३ | इहलोकपरलोकशरीरयोः | बार्ह० सू० | | १८ |
| ११५५ | इहैव श्रमणः इहैव ब्राह्मणः | भगवान् | ... | ... |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ९३५ | तथानाप्तप्रणीतोक्ति० | श्लो० वा० | चो० सू० | १८५ |
| ९२ | तथेदममृतं ब्रह्म० | .... | ... | ... |
| १०९४ | तदत्यन्तविमोक्षोऽपवर्गः | न्या० द० | प्रथम० | १.१२२ |
| ७०८ | तदपेक्षा च सवित्तेर्मता | ... | ... | ... |
| ९६३ | तदा न व्याप्रियन्ते तु | श्लो० वा० | चो० सू० | ६७ |
| ३५२ | तद्रूपारोपगत्यान्य० | प्र० वा० | द्वितीय० | १६९ |
| ५४ | तनुभुवनकरणोपादानानि | उद्द्योतकरः | ... | ... |
| ३७९ | तन्मात्राकांक्षणाद्भेदः | ... | ... | ... |
| १०३२ | तस्मात् तन्मात्रसम्बद्धः | प्र० वा० | तृतीय० | २२ |
| ९२६ | तस्मात् प्रमाणमनपेक्षत्वात् | शा० भा० | प्रथम० | १.५ |
| ७९२ | तस्मादालोकवद् वेदे | श्लो० वा० | चो० सू० | ९५ |
| १२२ | तस्मादुभयहानेन | श्लो० वा० | आत्म० | २८ |
| ३१२ | तस्मादेकस्य भिन्नेषु | श्लो० वा० | आकृ० | २४ |
| ५१७ | तस्मादेवं प्रचक्षते | श्लो० वा० | अनुमान० | १४० |
| ९६४ | तस्माद् गुणेभ्यो दोषाणाम् | श्लो० वा० | चो० सू० | ६५ |
| ९५४ | तस्माद् बोधात्मकत्वेन | श्लो० वा० | चो० सू० | ५३ |
| ६११ | तस्माद् यतो यतोऽर्थाः | सौगताः | ... | ... |
| १८२ | तस्माद् वैधर्म्यदृष्टान्ते | प्र० वा० | तृतीय० | २५ |
| ३१७ | तस्य शक्तिरशक्तिर्वा | प्र० वा० | द्वितीय० | २२ |
| ४०५ | तस्य स्वपररूपाभ्यां | ... | ... | ... |
| १४८ | तस्यैव व्यभिचारादौ | प्र० वा० | प्रथम० | २२ |
| ७१३ | ताद्रूप्येण च धर्मत्वं | श्लो० वा० | चो० सू० | १४ |
| १००० | तृतीया | पा० सू० | द्वितीया० | १.३० |
| १२३ | तेनास्मात् प्रत्यभिज्ञानात् | श्लो० वा० | आत्म० | १३६ |
| ६३३ | तेभ्यश्चैतन्यम् | बार्ह० सू० | | ३ |
| २२ | त्रिगुणमविवेकि विषयः | सां० का० | | ११ |
| ५७७ | त्रिलक्षणेन या बुद्धिः | श्लो० वा० | अभाव० | ४४ |
| ६७९ | दिग्भागभेदो यस्यास्ति० | ... | ... | ... |
| १८ | दीर्घो बालस्य संसारः | धम्म० प० | | ५.६० |
| ५५८ | दृष्टः श्रुतो वार्थोऽन्यथा० | शा० भा० | प्रथम० | १.५ |
| १६४ | दृष्टिर्द्रष्टव्यमेदं च | अभि०को०भा० ( ? ) | | |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| १०४२ | दृष्टिभ्यां वर्ण्यते सन्धिः | ... | ... | ... |
| १०४ | देवदत्तस्य रूपरसगन्धस्पर्श० | उद्द्योतकरः | ... | ... |
| १५१ | देशकालस्वभावभेदादभेदो | ... | ... | ... |
| ६४६ | देहात् सकृदुत्पन्ना धीः | प्र० वा० | प्रथम० | ११५ |
| २६१ | द्रव्याश्रय्यगुणवान् संयोग० | वै० द० | प्रथम० | १.१५ |
| ६१६ | द्वयं प्रतीत्य विज्ञानमुत्पद्यते | भगवान् | ... | ... |
| ८३५ | द्वितीयाश्रित० | पा० सू० | द्वितीया० | १.२४ |
| ५१६ | द्विविधमनुमानम् | कुमारिलः | ... | ... |
| ५२ | द्वीन्द्रियग्राह्याग्राह्यं | अविद्धकर्णः | .... | ... |
| ५५६ | द्वे एव प्रमाणे | आ० दिङ्नागः ( ? ) | | ... |
| | | | | |
| १०८७ | धर्मं वो भिक्षवो देशयिष्यामि | म० व० | प्रथम० | ६.१२ |
| ६१६ | धर्माणां कारित्रमुच्यते | आचार्यसंहतभद्रः ... | | ... |
| ५०४ | धर्मो विरुद्धोऽभावस्य | प्र० वा० | तृतीय० | १९१ |
| ९८४ | धीप्रमाणता, प्रवृत्तेस्तत्प्रधानत्वात् | प्र० वा० | प्रथम० | ५ |
| ७१० | धीमात्रत्वेन संसाध्ये | भदन्तशुभगुप्तः | .... | .... |
| १६ | धूमेन ज्ञायते वह्निः | .... | ... | .... |
| | | | | |
| ३७६ | न खल्वपोह्यभेदाद् | बौद्धाः (?) | | |
| ५३३,७८५, ७९५ | न च स्वर्गकामो यजेतेत्यतो | शा० भा० | प्रथम० | १.२ |
| ३१९ | न चात्र कारणदोषोऽस्ति | .... | .... | .... |
| ३१९ | न चात्र बाधकः प्रत्ययोऽस्ति | .... | .... | ... |
| ५२६ | न चादर्शनमात्रेण | प्र० वा० | तृतीय० | १२ |
| ५३८ | न चानेकेन्द्रियग्राह्यं | श्लो० वा० | प्र० सू० | १५६ |
| ३६१ | न चावस्तुन एते स्युः | श्लो० वा० | अभाव० | ८ |
| १३७ | न चावस्थान्तरोत्पादे | श्लो० वा० | आत्म० | ३० |
| ७१९ | न चास्य चोदना स्याद्वा न वेति | शा० भा० | प्रथम० | १.५ |
| ९०१ | न चैष देशान्तरे कालान्तरे वा | शा० भा० | प्रथम० | १.२ |
| ३४२ | न जातिशब्दो भेदानां वाचकः | आ० दिङ्नागः | - | .... |
| ४८६ | न ज्ञानस्वभावाः सुखादयः | शङ्करस्वामी | ... | .... |
| ८९६ | न नर्मयुक्तं ह्यनृतं हिनस्ति | .... | .... | .... |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ३१५ | ननु च प्रागभावादौ | श्लो० वा० | अभाव० | ११ |
| ५२९ | ननु वा प्रमाणेन किमिति परः | तत्त्वटीका | ... | .... |
| १०४७ | नन्वज्ञानेन भासन्ते | .... | .... | .... |
| ५१५ | न पौनरुक्त्यमत्र, यस्मात् | उद्द्योतकरः | .... | .... |
| ३३ | न प्रकृतिर्न विकृतिः पुरुषः | सां० का० | | ३ |
| ५३९ | न प्रमाणान्तरं शाब्दम् | ... | ... | ... |
| २२७ | न वयं केनचित् कर्त्रा कृतस्य | कुमारिलः | ... | .... |
| ९९ | न व्यक्तशक्तिरीशोऽयं | .... | ... | . |
| ३१८ | न शाबलेयाद् गोबुद्धिः | श्लो० वा० | वन० | ४५ |
| ८६ | न सोऽस्ति प्रत्ययो लोके | वा० प० | ब्रह्म० | १२३ |
| ७१३ | न हिंस्याद् भूतानि | ... | ... | ... |
| | न हि तत् केवलं नीलं | ... | .... | .... |
| १२६ | न हि तत्क्षणमप्यास्ते | श्लो० वा० | चो० सू० | ५५ |
| ९९ | न हि भगवतः क्रीडर्था प्रवृत्तिः | न्या० वा० | चतुर्थ० | १.२१ |
| ३०९ | न हि सर्वत्र निमित्तानुरूपः प्रत्ययः | भाविविक्तः | .... | .... |
| ८४ | न हेतुरस्तीति वदन् सहेतुकं | जा० मा० | त्रयोविंश० | २७ |
| ९९६ | न ह्येकं नास्ति सत्यार्थं | .... | .... | .... |
| ७७५ | नादैराहितबीजायाम् | वा० प० | ब्रह्म० | ८४ |
| १३८ | नानित्यशब्दवाच्यत्वम् | श्लो० वा० | आत्म० | १३८ |
| ६५३ | नानिष्टेर्दूषणं सर्वम् | .... | ... | ... |
| ६९४ | नान्योऽस्ति ग्राहको ज्ञानाद् | .... | .... | .... |
| ४७० | नाभावो नामान्य एव | .... | .... | .... |
| ४५१ | नामजात्यादियोजना कल्पना | लक्षणकारः | ... | ... |
| ३७७ | नार्थशब्दविशेषस्य | .... | .... | ... |
| ५०४, ६२९ | नासिद्धेर्भावधर्मोऽस्ति | प्र० वा० | तृतीय० | १९० |
| ३६१ | नास्तिता पयसो दध्नि | श्लो० वा० | अभाव० | ३ |
| १०४८ | नास्तीह सत्त्व आत्मा वा | .... | .... | .... |
| १०४८ | नास्म्यहं न भविष्यामि | .... | .... | ... |
| ५१५ | निगमनं पुनरुक्तत्वादेव न | आ० दिङ्नागः | .... | .... |
| १६३, ६१८ | नित्यं तमाहुर्विद्वांसः | प्र० वा० | प्रथम० | २०६ |
| २९३, ३२४ | नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः | वै० द० | प्रथम० | १.४ |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ११५ | प्रत्यक्षत एवात्मा सिद्धः | उद्द्योतकरो | भाविविक्तो वा | ... |
| १५३ | प्रत्यक्षत एवानुगतो द्रव्यात्मा | .... | .... | .... |
| ५५० | प्रत्यक्षमनुमानं च | .... | .... | ... |
| ५५६ | प्रत्यक्षमनुमानव्यतिरिक्तप्रमाणा० | अविद्धकर्णः | ... | .... |
| ७२० | प्रत्यक्षस्तु वेदवचनप्रत्ययः | शा० भा० | प्रथम० | १.२ |
| ६७२ | प्रत्येकं न चाणूनां | भदन्तशुभगुप्तः | | .... |
| ८७८ | प्रत्येकं सार्थकत्वेऽपि | प्र० वा० | तृतीय० | २४९ |
| ३१८ | प्रत्येकसमवेतापि | श्लो० वा० | वन० | ४७ |
| ३१८ | प्रत्येकसमवेतार्थ० | श्लो० वा० | वन० | ४६ |
| ९४९ | प्रमाणमविसंवादि ज्ञानम् | प्र० वा० | प्रथम० | ३ |
| ५५१ | प्रसिद्धसाधर्म्यात् साध्यसाधनम् | न्या० द० | प्रथम० | १.६ |
| २२२ | प्राक्कार्यनिष्पत्तेर्व्यापारो | श्लो० वा० | श० नि० | ४३३ |
| ८ | प्रायः प्राकृतसक्तिः | प्र० वा० | प्रथम० | २ |
| | | | | |
| ८९६ | बहूनानि नियुज्यन्ते | ... | .... | .... |
| १८ | बाह्यो न विद्यते ह्यर्थो | ल० सू० | दशम० | १५४-५५ |
| १४१ | बुद्धिः प्रधानस्वभावा | .... | .... | ... |
| १३७ | बुद्धिजन्मनि पुंसश्च | प्र० समु० | ... | ४८ |
| २२३ | बुद्धिजन्मेति च प्राह | श्लो० वा० | चो० सू० | ५३-५४ |
| ४७३, ५३९, ६०१ | बुद्धिभेदान्न चैकत्वं | श्लो० वा० | प्र० सू० | १५८ |
| ५५ | बुद्धिमत्कारणाधिष्ठितं | न्या० वा० | चतुर्थ० | १.२१ |
| २८० | बुद्धिरुपलब्धिर्ज्ञानमिति | न्या० द० | प्रथम० | १.१५ |
| ९३३ | बुद्धीनामपि चैतन्य० | श्लो० वा० | श० नि० | ४०४ |
| १००९ | ब्रह्मणो ज्ञानमप्रतिघं वैराग्यं च | पुराणम् (?) | .... | .... |
| | | | | |
| १७ | भस्मीभूतस्य शान्तस्य | .... | .... | .... |
| १६५ | भारं वो भिक्षवो देशयिष्यामि | सं० नि० | स्क० सं० | २२ |
| १६५ | भारहारः कतमः पुद्गलः | सं० नि० | स्क० सं० | २२ |
| १०४२ | भावे किं प्रमाणमिति चेदत एव | ... | .... | .... |
| ५४ | भुवनहेतवः प्रधानपरमाण्वदृष्टाः | उद्द्योतकरः | ... | .... |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ८९७ | भूतिर्विभूतिरैश्वर्यम् | अम० को० | प्र० का० | १.३६ |
| २६ | भेदानां परिमाणात् | सां० का० | | १४ |
| ३९ | भेदे हि कारणं किञ्चित् | प्र० वा० | तृतीय० | १७३ |
| ४८२ | भ्रान्तिः संवृत्तिः सा | आ०दिङ्नागः | | ... |
| | | | | |
| १९ | मयूरव्यंसकादयश्च | पा० सू० | द्वितीय० | १.७२ |
| ५२,५७, २३४ | महत्यनेकद्रव्यवत्त्वाद्रूपाच्च | वै० द० | चतुर्थ० | १.६ |
| १०६ | मातुरुदरनिष्क्रमणकालोत्तरं | अविद्धकर्णः | .... | .... |
| १६ | मा भिक्षवः पुद्गलः पुद्गलं | .... | .... | .... |
| ७११ | मा भूत् सर्वथालम्बनप्रतिषेधे | आ०दिङ्नागः | | .... |
| २६९ | मालादौ च महत्त्वादिः | प्र० वा० | द्वितीय० | १५७ |
| २६८ | मालाबहुत्वे तच्छब्दः | प्र० वा० | द्वितीय० | १५६ |
| ११२ | मुख्यासम्भवादुपचारो न युक्तः | उद्द्योतकरः | | ... |
| २९ | मूलप्रकृतिरविकृतिः | सां० का० | | ३ |
| | | | | |
| १००६ | यः सत्यवाक् सत्यसङ्कल्पः | उपनिषद् | .... | ... |
| १०९३ | यतोऽभ्युदयनिःश्रेयससिद्धिः | वै० द० | प्रथम० | १.२ |
| १६ | यत्किञ्चिद्भिक्षवः समुदयधर्मकं | म० व० | प्रथम० | ७.१८ |
| ४५६ | यत् ज्ञानार्थरूपादौ विशेषणा० | न्यायमु० | .... | .... |
| ७९८ | यत्तु लौकिकं वचनं तच्चेत् | शा० भा० | प्रथम० | १.२ |
| ८१३ | यत्र स्वातन्त्र्यमिच्छायाः | .... | .... | .... |
| ५०३ | यत्राप्यसाधारणत्वादनुमानाभावे | ... | .... | .... |
| ४५७ | यत्रैषा कल्पना नास्ति | लक्षणकारः | .... | .... |
| १४९ | यत् सङ्घातरूपं तत् परार्थं | .... | .... | ... |
| ६८ | यथा बुद्धिसत्तायामीश्वरस्य | उद्द्योतकरः | .... | .... |
| ४८३ | यथा यथा ह्यर्थस्याकारः | आचार्यः | .... | ... |
| ८९ | यथा विशुद्धमाकाशं | .... | ... | .... |
| ३५२ | यथा श्वमांसादीनां स्वत एवा० | प्र० भा० | स० प्र० | |
| ६७८ | यथैकस्वभावस्यासदद्रव्यादि० | भदन्तशुभगुप्तः | ... | ... |
| ६९८ | यथैव भवतां विज्ञानवादिनां | भदन्तशुभगुप्तः | ... | .... |
| ७१० | यदन्तर्ज्ञेयरूपं तु | आ०दिङ्नागः | .... | ... |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ९५२ | यदा क्षुदादिभिरुपहतं मनो | शा० भा० | प्रथम० | १.५ |
| ८६३ | यदा न व्याप्रियन्ते तु | श्लो० वा० | चो० सू० | ६७ |
| ३९४ | यदि शब्दस्यापोहोऽभिधेयोऽर्थः | उद्द्योतकरः | .... | ... |
| ३४२ | यदि शब्दान् पक्षयसि | उद्द्योतकरः | .... | .... |
| ४५२ | यदृच्छाशब्देषु नाम्ना विशिष्टोऽर्थः | आचार्यः | .... | .... |
| २९ | यदेव दधि तत् क्षीरं | .... | .... | .... |
| १०३७ | यद्यत्र भवतो मन्दचक्षुषो | .... | .... | ... |
| ६९ | यद्यपि नित्यमीश्वराख्यं कारणम् | न्या० वा० | चतुर्थ० | १.२१ |
| ७११ | यद्यपीन्द्रियविज्ञप्तेः | भदन्तशुभगुप्तः | .... | .... |
| २४७ | यया जातिर्जातिलिङ्गानि | वा० भा० | द्वितीय० | २.६९ |
| १८९ | यद्वस्त्वन्तशः सर्वज्ञस्यापि न ज्ञानम् | .... | .... | .... |
| ३४२ | यस्य निर्विशेषणा भेदाः शब्दैः | उद्द्योतकरः | ... | .... |
| १०१९ | यस्यां रात्रौ तथागतोऽभिसम्बुद्धः | भगवान् | .... | ... |
| ५६ | याजकादिभ्यश्च | पा० सू० | द्वितीय० | २.९ |
| २८८ | यावच्चात्मनि न प्रेम्णो | प्र० वा० | प्रथम० | १९३ |
| २५७, २६०, ३३७ | युगपज्ज्ञानानुत्पत्तिर्मनसो | न्या० द० | प्रथम० | १.१६ |
| १९ | युष्माभिरेव कर्तव्यम् | धर्मप० | विंश० | २७६ |
| १५, ३३९ | येन येन हि नाम्ना वै | ल० सू० | दशम० | ५०० |
| २०३ | ये रूपत्वादिसामान्याश्रयाः | भाविविक्तः | .... | .... |
| १६५ | योऽसावायुष्मन्नेवंनामा एवंजातिः | सं० नि० | स्क० सं० | २२ |
| | | | | |
| ७६ | रजोजुषे जन्मनि सत्त्ववृत्तये | काद० | | १ |
| २४८ | राग उच्यते वाससः | शङ्करस्वामी | ... | .... |
| २६२ | रूपरसगन्धस्पर्शाः सङ्ख्याः | वै० द० | प्रथम० | १.५ |
| ५३ | रूपसंस्कारः रूपसमवायः | वै० द० उप० | चतुर्थ० | १.६-७ |
| ५२ | रूपसंस्काराभावाद्वायो० | वै० द० | चतुर्थ० | १.८ |
| | | | | |
| ५२३ | लिङ्गलिङ्गिधियोरेवं | प्र० वा० | द्वितीय० | ८२ |
| ५२८ | लोकप्रसिद्धमनुमानं चार्वाकैरपी० | पुरन्दरः | ... | .... |
| | | | | |
| १४४ | वत्सविवृद्धिनिमित्तं | सां० का० | | ४१ |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| १० | शास्त्रेषु हि परं प्रवर्तयितुकामः | .... | .... | .... |
| ३६१ | शिरसोऽवयवा निम्नाः | श्लो० वा० | अभाव० | ४ |
| ४३७ | शेषाद्विभाषा | पा० सू० | पञ्चमा० | ४.१५४ |
| ७१२ | श्रेयो हि पुरुषप्रीतिः | श्लो० वा० | चो० सू० | १९१ |
| ५५६ | षण्ढस्य रूपे वैरूप्ये | प्र० वा० | तृतीय० | २११ |
| १४ | षण्णामपि पदार्थानामस्तित्वं | ... | .... | ... |
| ११२७ | षोडशभिन्नोऽयं सत्याभिसमयः | .... | .... | .... |
| ५४१ | संकेतापेक्षया तस्य | .... | .... | ... |
| १५८ | संक्लिष्टा चेद् भवेन्नासौ | मध्या० वि० | | २१ |
| १५८ | संक्लिष्टा च विशुद्धा च | मध्या० वि० | | १६ |
| ५७, २६३, २८७ | संख्याः परिमाणानि पृथक्त्वं | वै० द० | चतुर्थ० | १.१२ |
| ९८० | संवर्तकल्पो नरकासम्भवात् | बौद्धाः | .... | .... |
| ५५ | सकलभुवनहेतुत्वादेवास्य | प्रशस्तमतिः | .... | .... |
| ९४५ | स खलु प्रत्यक्षं प्रमाणं नानुमानम् | आचार्यः | .... | .... |
| १३ | स चायमङ्कुरो न स्वयंकृतो | शालि० सू० | | १०२ पृ० |
| १६४ | स जीवस्तच्छरीरम्, अन्यो जीवः | भगवान् | ... | .... |
| ४६८ | सत्तादिसामान्यस्वभावानुविद्ध एव | सुमतिः | .... | .... |
| ४२ | सत्ता स्वकारणाश्लेषात् | प्र० वा० | द्वितीय० | ११५ |
| १२६, ९३३ | सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां | मी० सू० | प्रथम० | १.४ |
| २३३ | सदकारणवन्नित्यम् | .... | .... | .... |
| १०३ | सदाद्यविशेषविषयाविषय० | अविद्धकर्णः | ... | .... |
| ५६ | सदाद्यविशेषास्कन्दिता० | प्रशस्तमतिः (?) | | ... |
| १७६ | स धर्मेषु धर्मानुदर्शी विहरन् | भगवान् | ... | ... |
| ६२१ | सन्ततिकार्यं चेष्टं न विद्यते | .... | .... | .... |
| २०१ | सन्दिग्धवस्तुनिर्णयनिबन्धनं | .... | .... | ... |
| ९९९ | स पश्यति दिव्येन चक्षुषा | दी० नि० | प्रथम० | २.५ |
| ७३ | सप्त भुवनान्येकबुद्धिनिर्मितानि | प्रशस्तमतिः | ... | .... |
| ५१७, ६६४ | सप्तमी | पा० सू० | द्वितीय० | १.४० |
| ७०५-६ | स बहिर्देशसम्बद्धः | शा० भा० | प्रथम० | १.५ |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| १००६ | स भगवाँस्तथागतोऽर्हन् | दी० नि० | प्रथम० | २.५ |
| ३४७ | समानप्रसवात्मिका जातिः | न्या० द० | द्वितीय० | २.७१ |
| २७९ | समूहसन्तानावस्थाविशेषाः | अविद्धकर्णः | .... | ... |
| २ | सम्बद्धानुगुणोपायं | प्र० वा० | तृतीय० | २१४ |
| ९९ | सर्गस्थित्युपसंहारान् | .... | .... | .... |
| ५४ | सर्गादौ पुरुषाणां व्यवहारो | प्रशस्तमतिः | .... | .... |
| १४, ६१८ | सर्वं सर्वमिति ब्राह्मण यदुत | भगवान् | ... | .... |
| १०८९ | सर्वः सर्वं न जानाति | म० भार० | व० प० | ७२.८ |
| १००६ | सर्वज्ञोऽहं सर्वदर्शी | भगवान् | ... | .... |
| ३८९ | सर्वत्राभेदादाश्रयस्यानु० | ... | .... | .... |
| ६८२ | सर्वत्रालम्बनं बाह्यं | श्लो० वा० | निरा० | १०८ |
| ३५२ | सर्वा मिथ्यावभासोऽयम् | प्र० वा० | तृतीय० | ७१ |
| ६१२ | सहशब्दश्च लोकेऽन्य० | भदन्तशुभगुप्तः | .... | .... |
| ६९१ | सहोपलम्भनियमाद् | प्रमा० वि० | परि० | १ |
| ६९९ | साकारं तन्निराकारं | .... | ... | .... |
| ६९६ | साकारज्ञानपक्षे च | .... | .... | .... |
| ६४६ | साक्षान्न ह्यन्यथाबुद्धेः | प्र० वा० | द्वितीय० | ५३० |
| ५७७ | सात्मनोऽपरिणामो वा | श्लो० वा० | अभाव० | ११ |
| ५१२ | साध्यस्यैवाभिधानेन | प्र० वा० | चतुर्थ० | १७ |
| ५४१ | सान्निध्यमात्रतस्तस्य | श्लो० वा० | .... | .... |
| ४ | सामग्रीफलशक्तीनां | प्र० वा० | तृतीय० | ७ |
| ३०१ | सामान्यमपि नीलत्वादि | शङ्करस्वामी | .... | .... |
| १०९५ | साहङ्कारे मनसि न शमं | ... | ... | .... |
| १९ | सुप्सुपा | पा० सू० | द्वितीय० | १.४ |
| ७४३ | सूर्यमस्य चक्षुर्गमयतात् | वेदः | ... | .... |
| ४७३, ७६०, ७७४, ७८१. | स्थितं नैव हि जात्यादेः | श्लो० वा० | प्र० सू० | १४१ |
| २२७ | स्थिरमव्याकृतं वास्यम् | भगवान् (?) | ... | .... |
| ३३४ | स्पर्शवद्द्रव्यसंयोगात्कर्मणो नाशः | ... | .... | .... |
| ९०३ | स्वतस्तावद् द्वयं नास्ति | श्लो० वा० | चौ० सू० | ३५ |
| १२९ | स्वप्नादिप्रत्यये बाह्य | श्लो० वा० | निरा० | १०७-८ |
| ४७४ | स्वबुद्ध्या येन रज्येत | .... | .... | .... |

| त० पृ० | उद्धरणम् | ग्रन्थः | प्रकरणम् | क्रमः |
|---|---|---|---|---|
| ८ | स्वयमप्येवं प्रतिपत्तिर्भवति | न्या० बि० | द्वितीय० | ४४ |
| ९७६ | स्वरूपस्य स्वतो गतिः | प्र० वा० | प्रथम० | ६-७ |
| ७१३,९९५ | स्वर्गकामोऽग्निष्टोमेन यजेत | .... | .... | .... |
| ४९० | स्वसंवेदनस्य निषेधात् तस्य | कुमारिलः | ... | .... |
| ३६१ | स्वसंवेद्यमनिर्देश्यम् | ... | .... | .... |
| २५३ | स्वातन्त्र्येण प्रसङ्गमुखेन वा | शङ्करस्वामी | ... | .... |
| ३१६ | स्वाश्रयेन्द्रियसन्निकर्षापेक्ष० | ... | .... | .... |
| | | | | |
| २२ | हेतुमदनित्यमव्यापि | सां० का० | | १० |
| ३०७ | हेत्वर्थापरिज्ञानादिदमुच्यते | उद्द्योतकरः | .... | .... |



तत्त्वसङ्ग्रह-पञ्जिकान्तःपाति—

# ग्रन्थ-ग्रन्थकृतां सूची

स्वयूथ्याः परयूथ्याश्च ग्रन्था: ग्रन्थकृतश्च ये ।
स्मृताः श्रीगुरुशिष्याभ्यां, तेषां सूची विधीयते ॥

# शोधनपत्रम्

किञ्चिच्छैघ्रचान्मतेर्मान्द्यात् प्रमादाच्चैव चक्षुषः ।
स्खलनं कुत्रचिज्ज्ञातं शोध्यं तद्धि विचक्षणैः ॥

| पृ० | प० | अशु० पा० | शु० पा० |
|---|---|---|---|
| २५ | ४ | विकृतवात्म० | विकृतावात्म० |
| १०३ | ५ | शीररचक्षुरादीनां | शरीरचक्षुरादीनां |
| १०३ | ११ | प्रभिज्ञान-सिद्धातिद० | प्रत्यभिज्ञानसिद्धद० |
| १३३ | २ | तदेषोऽपि | तदैषोऽपि |
| १५६ | १३ | ०दर्शनावलम्बिना० | ०दर्शनावलम्बिन० |
| १६२ | ७ | प्रकारान्तेरण खण्डवम् | प्रकारान्तरेण खण्डनम् |
| १६४ | १५ | दृष्टिद्रष्टवभेदं | दृष्टिद्रष्ट्व्यभेदं (?) |
| १७२ | ९ | वध्यासुतादिवत् | वन्ध्यासुतादिवत् |
| १८५ | २ | उपकारीभवँ० | उपकारी भवँ० |
| १९१ | २ | ननुचार्थ० | ननु चार्थ० |
| २०९ | ३ | ०क्रियारभ्भे | ०क्रियारम्भे |
| २०९ | २१ | समर्थमाह | समर्थनमाह |
| २१० | १४ | कमथनपे० | कथमनपे० |
| २२१ | १ | दृश्यते | दृश्यन्ते |
| २२४ | ५ | यो तत्र | यो यत्र |
| २२५ | २ | भावाभावादिनौ | भावाभावाविमौ |
| २४० | ८ | धर्मैविना | धर्मैर्विना |
| २५२ | ३ | 'उद्योतकरमतखण्डनम्' इति शीर्षकमावश्यकम् | |
| २५२ | ५ | चानिष्टा | चानिष्ठा |
| २९५ | ८ | गोतत्त्वाथीन्तरं | गोतश्वार्थान्तरं |
| ३१३ | १४ | ०त्रोद्द्योतरकस्य | ०त्रोद्द्योतकरस्य |
| ३५१ | ३ | अभिजल्पन्नत्वा० | अभिजल्पत्वा० |
| ३५२ | ८ | शब्दार्थोऽर्थः | शब्दार्थोर्थः |
| ३५२ | ८ | (प्र० वा० २.१७१) | (प्र० वा० २.१६९) |
| ३५२ | २२ | ,, | ,, |
| ३७९ | २ | ०मात्रवाच्यं | ०मात्रवाच्यत्वं |
| ३७९ | १० | ०द्भिनार्थाः | ०द्भिन्नार्थाः |
| ३८५ | ११ | ज्ञयेऽनु० | ज्ञेयेऽनु० |
| ३९७ | ८ | (तत्त्व० १०६) | (तत्त्व० ११०६) |
| ५६४ | १ | घटान्तर व्यव० | घटान्तरव्यव० |
| ४७६ | ४ | तत्त्वान्योभया० | तत्त्वान्यत्वोभया० |

| पृ० | प० | अशु० पा० | शु० पा० |
|---|---|---|---|
| ४७९ | १ | वस्तुस्तु | वस्तुतस्तु |
| ४७९ | ३ | रूपशब्दाद० | रूपशब्दादि० |
| ४८४ | ६ | वेशैषिकमतम् | वैशेषिकमतम् |
| ४८७ | ८ | ०फलविप्रतिप्राप्ति० | ०फलविप्रतिपत्ति० |
| ४९५ | ४ | ०नुपपपन्नत्वे | ०नुपपन्नत्वे |
| ४९८ | १ | व्यापार्यामाणत्वाद् | व्यापार्यमाणत्वात् |
| ५१६ | ११ | सम्बन्धसिध्यर्थं | सम्बन्धसिद्ध्यर्थं |
| ५११ 'कुमारिलमतम्' इति शीर्षकं १७७५ कारिकातोऽनन्तरमेव बोद्धयम् | | | |
| ६३९ | ३ | नाशि | नापि |
| ६४४ | १४ | [ G. 559 ] | [ G. 529 ] |
| ६५८ | १ | ०सन्तान्वय० | ०सन्तानान्वय० |
| ६६४ | १२ | ऐहिलौकिक० | ऐहलौकिक० |
| ६७१ | २० | विष्षष्टमि० | विष्पष्टमि० |
| ६८४ | २ | भदन्तशुभगुप्तमतम् | भदन्तशुभगुप्तमतखण्डनम् |
| ७३१ | ५ | 'परमतेनाभिव्यक्तेरसिद्धिसाधनम्' इतिशीर्षकं बोद्धयम् | |
| ७३७ | ३ | प्रयत्ननाभि० | प्रयत्नानभि० |
| ७७३ | २ | ०वाक्यादिविधश्च | ०वाक्यादिविरोधश्च |
| ७९३ | ४ | ०नादि कल्पना | ०नादिकल्पना |
| ७९८ | ६ | वह्नयादिः | वह्नयादिः |
| ८११ | ७ | शब्दाअभिव्यक्ति० | शब्दाभिव्यक्ति० |
| ५७७ | ४ | युज्यते | युज्येते |
| ९०९ | ८ | नामासुभया० | नामानुभया० |
| ९१९ | ५ | वाभ्यधिकेन ते | वाभ्यधिके मते |
| ९२० | ६ | २७६५ | २८६५ |
| ९४२ | ५ | वस्तुसंवादः | वस्तुसंवादे |
| १००६ | १२ | ( दी० नि० १.२.१ ) | ( दी० नि० १.२.५ ) |
| १०४८ | १८ | नास्त्यहं | नास्म्यहं |
| १०४९ | १४ | ०वैशेषिकक० | ०वैशेषिक० |
| १०७५ | १ | अतीन्द्रिययार्थ० | अतीन्द्रियार्थ० |
| १०८२ | ५ | यावद्गुणोघो० | यावद्गुणौघो० |
| १०९३ | ११ | अभ्युदय० | भ्युदय० |
| ११०५ | १२ | द्वयाकाराविं० | द्वयाकारवि० |
| १११२ | २ | ( भ० गी० ४.३९ ) | ( भ० गी० ५.१८ ) |